वाणीं भजत

# गैर्वाणी



## मासिकी पत्रिका

संपुटः ८ | 15 SEPTEMBER 1970 | क्रमांकः ९



साधारण भाद्रपदांकः] शकवर्षः १८९२ [मूल्यम् ४० पैसाः

# विषयसूची



# वन्दामहे बालकृष्णम्

वसुदेवात्मज मसुरनिरासक मसमाधिकरहितं
महान्तं ॥ वन्दामहे ॥

काराजातं कंसनिषूदन मखिलभुवनरक्षं
सुरक्षम् ॥ वन्दामहे ॥

मायालीलं मान्यकुचेलं मर्दितशिशुपालं
सलीलम् ॥ वन्दामहे ॥

गोकुलबालं गोपीलोलं गुरुसेवाशीलं
गोपालम् ॥ वन्दामहे ॥

जलदश्यामं जलधिगभीरं जलजमुग्धनयनं
पुराणम् ॥ वन्दामहे ॥

गोपकवेषं कृतदरहासं मुनिजनहृद्वासं
रमेशम् ॥ वन्दामहे ॥

—:o:—

# समस्याद्वयम्

## क्षेत्राक्रमणविक्रमः

—⊙—

अस्मन्नायकानां महती भ्रान्तिरासीत् यत् भूमेस्सस्यारोपणार्हस्या-नर्हस्य वा सकलजनेषु विभागे कृते सकलजनानां सौख्यं भवेदिति आहारसमस्या दूरीक्रियेतेति च । अनया ते भूस्वामिनः अनिन्दन् महाक्षेत्रं स्वायत्तीकृत्य वर्तमानान्, प्रोद्साहयंश्च भूमौ स्वाम्यरहितान् कर्षकान्, कृषिकर्मनिष्ठान् कार्मिकान् । फलतः बहुत्र कल्लोला बन्धाः समजायन्त बहुधा । एतन्निवारणार्थं विनोबाभावेमहाशयेन भूदानोद्यमः प्रारभ्यत । लक्षशः एकराः भूमेरदीयन्त तस्मै महानायकाय । सर्वकारोपि विना शुल्कग्रहणं रिजिस्टर कर्म (पंचायितं) अनुमेने । सा च भूमिः लक्षशो दरिद्रेभ्यः जनेभ्यः वितीर्णा ।

परन्तु तस्यां प्रायशः तत्क्षणं कृष्ययोग्या एव भूमिरधिका आसीत् । वस्तुतो दरिद्रः तां कथं वा कृषियोग्यां परिणमयेत्? तत्रत्यम् वृक्षगुल्मादिकमपनेय, शिला निरसनीयाः, निम्नमुन्नत च समीकर्तव्यं, जलाधार आस्तेयः । एवं सर्वकार्यकरणे धनस्यैव प्रभाव अपेक्ष्यते । न च दरिद्रस्य निकटे काकिण्यपि वर्तते । अतः तैर्दरिद्रैः कौपीनसंरक्षणार्थमयं पटाटोपं इतिवत गोमहिषादि संपादने हलकुद्दाल खनित्रदात्रादि संग्रहणे महानायासोंगीकृतः । एतेन तस्य दैनिकजीविकार्जनं नष्टं स्वक्षेत्रे एव तस्य परिश्रमात् । तथापि सा नोर्वरा आसीत् । ततस्तेन ऋणार्जनेन तस्याः संशोधनमाचरितम् । फलतः स्वक्षेत्रं उत्तमर्णाधीन मभवत् ।

इदं विचार्य सर्वकारेण भूप्रदानेन सह वृषभसंग्रहणाय कूपखननाय बीजक्रयाय कर्षणरोपणशोधनकर्तनादिक्रियार्थं ऋणमपि प्रदत्तम् । स कर्षकश्च एवंविधकष्टान्यसहिष्णुः ऋणधनं सम्यगुपभुज्य सकुशलं वर्तते स्म । एवं च भूदानोद्यमः फलप्रदो नासीदिति सर्वेऽप्यन्तरमन्यन्त ।

एवं स्थिते भूम्याक्रमणोद्यम एव समापतितः । अत्र प्रथमं सर्वकाराधीनानां अस्वामिकानां भूमीनामाक्रमणमारब्धम् । आक्रान्ताश्च ताः सर्वकारेण आक्रामकीयत्वेन प्रमाणिताः । तेन महान् क्षतिरासीत्प्रजानां सर्वकारस्य चेति नैव जानन्ति वराकाः । (1) एतस्मिन्नाक्रमणे ग्रामोपकण्ठप्रदेशाः प्रणष्टाः, तेन च गोमहिषादिकस्य वत्सानां च इतस्ततः चारस्य सौकर्यं विनाशितम् । यद्यपि सस्यरहितकाले एतद्धानिः नैवानुभूयते तथापि सस्यकाले सर्वे च महान्तं क्लेशमनुभवन्ति पशुचाराय । (2) ह्रदान्तर्भागाक्रमण द्वितीयम् । एतेन च आक्रामकाः ह्रदमध्यस्थानि स्वक्षेत्राणि उदस्थापयन् मृत्संचयेन येन ह्रदे पूर्णेऽपि आत्मक्षेत्रं जले न निमज्जेत् । एवंकरणेन ह्रदस्य गाधता समापतिता, जलं चात्यल्पमेव माति स्म तत्र । ततः ह्रदमातृकाः केदारास्सर्वेऽपि अपर्याप्तजला अशुष्यन् । (3) अपरं च महापथानां पार्श्वतो वर्तमानस्य स्थलस्याक्रमणम् । एतेन महापथस्य पुनर्नवीकरणे वांछिते मृद् दूरत एवानेया भवति । तेन च निर्माणव्ययश्च महाधिको भवति च । (4) एवं अयोमार्गपार्श्वभूमीनामाक्रमणस्यापि एतदेव फलं भवति । अयमपरः दोषोऽधिकः यत् अयःपथपार्श्वे जलपूरणेन, सुमृदुलं कर्षणेन च मार्गसेतुरकठिनः भारवहानां वेगगामिनां चायश्शकटानां आघातमसहमानः कदाचित् प्रमज्जति, येन शकटपतनं जननाशश्च संभाव्यते । अल्पाक्रमणे नैवंविधक्लेशेषु जाग्रत्सु तन्निवारणयोजनाया अवकाशमपि अददन् अद्य प्रसह्य भूम्याक्रमणोद्यम

आपतितः। अत्रोद्यमे प्रथमं बहवः क्षेत्राधीशा हताः आक्रान्ता च तेषां भूमिः। एतत्संदर्भे एव नक्सलैटोद्यमरूपो हालाहलस्समुद्भूतः यस्य गिलनाय अद्यावधि शङ्करो लोकशङ्करः नावातरत्।

अथाद्य तु आसेतुशीतनगं समाजसाम्यवादिपक्षाभ्यां आघोषितः क्षेत्राक्रमणोद्यमः अन्यैश्च समाजवादिनायकभूम्याक्रमणयत्नश्च तत्रानुबन्धितः। तेन भारतमेव व्याकुलमभवदिति किं चित्रं गजनिमीलिकया विलसन् सर्वकार एव स्वतन्द्रा मुज्झित्य नेत्रे उन्मीलयति। बहुषु प्रदेशेषु आक्रामका रुद्धा बद्धाश्च। तथापि बहुत्र बहुयेकरपरिमिता भूमिराक्रान्ता। किन्नामाक्रमणम्? उत्सवयात्रया तत्र गत्वा पताकायाः स्थापनं, हलेन हलाभ्यां हलैर्वा कर्षणं, उपन्य सप्रदानं च। एवं प्रथमतः आक्रमणं अनन्तरं तस्य क्षेत्रस्य व्यक्तिशः विभागः संभाव्यते। विभागवेलायां वैषम्यस्यावकाशः जाग्रत्येव। प्रथमं सर्वकारतः आक्रामकाणां तत्राधिकारं द्रढयत् प्रमाणपत्र मावश्यकम्। सर्वकारश्च दुराक्रामकाणां प्रमाणपत्रप्रदाने इदानीं यथापूर्वं न पुरस्सरति। आक्रामकस्यैव क्षेत्रमिति सूत्रे अङ्गीकृते चैनीयैराक्रान्तो भूभागः कुतो वा तेषां न स्यात्? अपि च आक्रमणं भूपरिमितमेव किं स्यात्? गृह, कर्मागार, धन, धान्य, भार्या, परिजनादिपर्यन्तं किं न गच्छेत्? केन वा कारणेन इदानीं आक्रमणं प्रमाणयितुं न चेच्छति सर्वकारः।

उद्यमः कुत्र पर्यवस्यतीति दैवमेव जानाति। अन्ते बलवतां तत्रापि राक्षसबलवतां दुराक्रामकाणां राज्यमिदं सम्पन्नम्। अधुना न्याय्यत्वेन दृष्टो विषयः अनुपदमेव अन्यायत्वेन विभाव्यते। भट्टिर्नष्टो भारवीयोपि नष्टः भिक्षुर्नष्टो भीमसेनोपि नष्टः, भुक्कुण्डोहं भूपतिस्त्वं हि राजन् भव्मावल्या मन्तकस्सन्निविष्ट" इति वचनानुगुणं सर्वेषामपि कष्टकालस्समुपस्थितः। सुखव्याजेन कष्टमेवानुभवन्ति सर्वेपि।

अव्यवस्थितचित्तानां प्रसादोपि भयङ्करः।

—o—

# श्री ज्योतिस्संश्लेषविद्यापीठम्

## नडवलूरु (तिरुपति)

14–8–1970 भृगुवासरे ज्यो. सं. विद्यापीठाध्यक्ष्येण श्रीजगन्मङ्गल-सौभाग्यदेवता-महालक्ष्मीव्रतमहोत्सवः नडवलूरुग्रामे श्रीकोदण्डरामभजनमन्दिरप्रांगणे सम्पन्नः ।

प्रातः – श्रीमहालक्ष्म्याः ग्रामोत्सवः,

सहस्रनामार्चनम्, होमः, गोपूजा च ।

मध्याह्ने – विद्यार्थिनां संस्कृतकण्ठपाठ परीक्षाः ।

तत्कालसभायाः अध्यक्षमहोदयस्य श्री B. शेल्वकुमारस्य संस्कृतकण्ठपाठ मधिकृत्य अभिभाषणम्, श्री गङ्गराजु गोपालार्यस्य मण्डलसमाजसंघटकस्य (D. S. O.) सांस्कृतिककार्यक्रमस्य विद्यार्थिलोकाभ्युदयस्य च परस्परसम्बन्ध मधिकृत्य भाषणं च सम्पन्नम् ।

अन्ते उत्तीर्णविद्यार्थिनां प्रथम द्वितीय तृतीय-विशेष-पुरस्कारप्रदानं योग्यता-पत्रप्रदानं च सभाध्यक्षैः समाचरितम् ।

सायन्तने – संस्कृतभाषाप्रचारिण्याः सभायाः प्रधानमन्त्रिमहोदयैः श्रीमद्भिः ति. कं. तिरुवेङ्कटाचार्यवर्यैः भगवद्विषयं भागवतधर्मांश्चाधिकृत्य उपन्यस्तम् ।

निपुणैः पार्षदैः सह श्रीमत्याः मुनिरत्नम्मायाः गानसभा च सम्पन्ना ।

रात्रै विद्यापीठाध्यक्षस्य श्री ए. वरदराजमहोदयस्य "प्रकृति-संस्कृती" अधिकृत्य आध्यात्मिकोपन्यासः प्रवृत्तः । तदनन्तरं श्रीकान्तं सूर्यनारायणभागवतैः "श्रीलक्ष्मीस्वयंवरः" हरिकथाकालक्षेपः कृतः ।

15–8–70 स्थिरवासरे पुनःपूजा विद्यापीठगौरवाध्यक्षैः सद्गुरु श्रीकुञ्जगुरु गोपालाचार्यस्वामिभिः अखण्डरामभजनेन सह ग्रामप्रदक्षिणसञ्चारश्च सम्पन्नः ।

एतत्सन्दर्भे (1) गंगराजु गोपालार्यस्य "उपन्यासकेसरी" इति (2) श्रीमत्याः मुनिरत्नम्मायाः "गानविशारदा" इति (3) श्री तिरुपति कंचि मुनिराजस्य "मृदंगविशारदः" इति (4) श्री श्रीकान्तं सूर्यनारायणभागवतस्य "हरिकथा कलाप्रवीण" इति च विरुदप्रदानं विद्यापीठाध्यक्षैः समाचरितम् ।



## कोविदपरीक्षां

### उत्तीर्य

### संस्कृतपंडितपदवीं निर्वहत !

एतत्सभीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्व-योग्या अंगीकृता । अतः तत्र उत्तीर्य पंडिता भवत ।

इति

ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.

# अबद्धं पठित्वा कुचोद्यं करोति

प्रजानायको हि प्रजानाशकोऽसौ
प्रजानायकोऽसौ प्रजाभानकोऽसौ
प्रजानायकोऽसौ प्रजायोजकोऽसौ
अबद्धं पठित्वा कुचोद्यं करोति ॥

अयं देवगेहप्रवेशाभिनेता
त्विदानीं मतध्वंसकाग्रेसरोभूत ।
पुरा तन्त्रनिष्ठोऽधुना यन्त्रनिष्ठः ॥ ॥ अबद्ध ॥

स्वतन्त्रत्वमेव त्रिषूद्बोधयन् हि
प्रजा अस्वतन्त्रता विधत्ते नितान्तम् ।
अभूद्रक्षको भक्षकस्सांप्रतं चेत् ॥ ॥ अबद्ध ॥

मतानां विरोधं कुलानां प्ररोधं
स्वयं कल्पयित्वा स्वयं तत्र भूत्वा
पुनस्तत्प्रशान्ति समुद्बोधयन् सन् ॥ अबद्धं ॥

प्रभूणां हि वर्षाशनं प्रत्यजानात्
सदा दातु मेषां प्रभुत्वापहारे ।
अहो तन्निरासाय चाद्येहतेऽसौ ॥ ॥ अबद्धं ॥

अहं कार्मिकाणां प्रणेतेति जल्पन्
अहंकारमूर्तिस्स प्रभ्रश्य तान्वै ।
इदानीं विनेतुं विनिर्माति शास्त्रम् ॥ ॥ अबद्ध ॥

प्रतिकूरकार्यं प्रवर्त्यैव छात्रान्
इदानीं तदीयानि कृत्यानि सोढुम्,
अशक्तस्समुद्बोधयत्वेव शान्ति ॥ ॥ अबद्ध ॥

दुराक्रामकान् क्षेत्रजाले प्रचं द्य
प्रसृप्तेषु तेषु स्वक्षेत्रापहारे ।
निराशाय तेषां प्रयासं विधत्ते ॥ ॥ अबद्धं ॥

प्रलोभ्य प्रकृष्य स्वपक्षे विपक्षान्
प्रहृष्ट, स्त्विदानी तथानुष्ठितेषु,
विपक्षेषु रुष्टो रुरुत्सत्यमून् भो ॥ ॥ अबद्धं ॥

प्रदानं महद्भ्यः प्रकाशं गृहीत्वा
स्वपक्षं धरन्, तद्विपक्षेषु चैव,
प्रकुर्वंस्तु दोषं प्रकाश्य प्रकुप्येत् ॥ ॥ अबद्धं ॥

## संस्कृतं जातीयभाषा भवेत्

पुदुच्चेरीनगरे 1-9-70 दिने धीमतां कलचस्य प्रथमसमावेशं उपक्रममाणः लप्टिनेंट् राज्यपालः **श्री बी० डी० जेट्टीमहोदयः प्राह** –

भारतदेशस्य संस्कृतं जातीयभाषात्वेन, मातृभाषा च प्रान्तीयभाषात्वेन, आंग्लं च अन्तर्जातीयभाषात्वेन भवितुमर्हन्तीति ।

एतत्सूचनाया आदरे भाषावैषम्यानि नश्येयुः, त्रिभाषासूत्रं च अनुसृतं भवेत, भारतदेशगौरवं च परिरक्षितं भवेत ।

# जनसङ्घ मुद्दीपये द्रचना

"अवरः"

चित्तूरु श्रीरामविलास-सभाभवने चित्तूरुजिल्ला रचयितृसंघ-समावेशः 25–7–70 सायं जिल्लाकलेक्टर श्री जि. वि. रामाराव महोदयस्य आध्यक्ष्येण समपद्यत । प्रसिद्धाभ्युदयरचयिता श्री आरुद्र महाशयः प्रारम्भोत्सवं कुर्वन् एवमभ्यभाषत –

"व्यावहारिकभाषायां रचनाः कर्तव्याः। ता एव जनसंघमुद्दीपयितुं प्रभवन्ति। तेलंगानोद्यमेन प्रादुर्भूतः अभ्युदयरचयितृसंघः। तत्राऽपि असंतृप्तिः प्रवृद्धा । अतः विप्लवसंघः कश्चिदुद्भूतः। एवं च यया कयाऽपि विधया रचयितॄणां संघैरवश्यं भाव्यम्। तदात्व एव रचना प्रकाशन-विचारविनिमयादि सौलभ्यं भवति। पूर्वमपि साहित्यसंघा आसन्; यद्यपि ते सीमिताः संकीर्णाः कूपस्थमण्डूकन्यायेन अवर्तन्त। कारणं तु स्पष्टं यत् पुरातनकवीनां राजाश्रयणं, तदाज्ञापनं च शिरोधार्यतया अत्यन्तमावश्यक मासीत्। अतः तादृशानां कविपुङ्गवानां वाणी साहिती-सुधा वा सामान्यजनानां दुर्लभवाऽसीत्। अन्नमाचार्यादि प्रजाकवीनां रचनाः जनप्रिया अभवन्। "चन्दमाम रावे" "जो अच्युतानन्द जो जो मुकुन्द" इत्यादि रचनाः प्रजाहृदयेषु संलग्ना अद्यापि गीयन्ते कीर्त्यन्ते च। व्यावहारिकाभाषायाः जनबाहुल्ये प्रसरत्प्रसादगुणवैशिष्ट्य मस्ति । कन्दुकूरि, गुरजाड इत्यादिप्रमुखानामप्ययमेव सिद्धान्तः साधनांश-श्चासीत् । जिल्ला-राष्ट्रस्थायिविधया रचयितॄणां संघटनमावश्यकम् ।

राष्ट्रीयीकृतनिधिद्वारा साह्यं प्राप्तुं एतादृशसंघैरवश्यम्भाव्यम्" इति रचयितृसंघमुद्दिश्य साहित्यचरित्र सिंहावलोकनं कुर्वन् सन्देश मदादारुद्र-महोदयः ।

स्थानिक कलाशाला-आन्ध्रशाखाध्यक्षः श्री वि. वि. यल्. नरसिंह रावुमहोदयः संघेन सम्मानितः ।

प्रसिद्धरचयित्री श्रीमती रामलक्ष्मी आरुद्राऽपि अस्मिन् समावेशे समागता ।

सभानन्तरं अष्टावधानविधानं श्री नरालरामिरेड्डि महोदयेन, प्रोद्दूटूरुवास्तव्येन निर्व्यूढम् । अस्याः सभायाः स्थानिकप्रभुत्व-कलाशालाध्यक्षैः श्रीसंपत्‌राघवाचार्यैः अग्रासनाधिपत्यं स्वीकृतम् ।

---

## सेलम्‌मे संस्कृतदिनोत्सवः

सेलं नगरस्य श्रीब्राह्मणसभाया आध्वर्येण आगस्ट् मासीय १५, १६, १७ तिथिषु त्रिष्वपि महावैभवेन संस्कृत-दिनोत्सवः समपद्यत । संस्कृतज्ञाः संस्कृताभिमानिनश्च बहवस्तत्र समाविष्टाः । प्रथमदिने कविसम्मेलनं द्वितीय दिने पण्डितसम्मेलनं तृतीयदिने सकलविद्वत्सम्मेलनं च निरवाह्यत ।

# न्यायमाला

## अजातपुत्रनामकरणन्यायः - ११

"अवरः"

दम्पती कौचिद्रात्रौ इष्टां गोष्ठीमनुभवन्तौ संजल्पितुमारब्धवन्तौ। पत्नी प्राह - अयि भोः, अस्मत्प्रेमैकनिधानस्य जनिष्यमाणस्य पुमपत्यस्य मम पितुर्नाम "राम" इति कर्तव्यमिति ममाशा। पतिः प्राह - "भद्रे! प्रथमं जनिष्यमाणस्य तस्य ममैव पितुनाम कृष्ण इति कर्तव्यं यतस्स वंशोद्धारकोऽस्माकं भविष्यति।

"मत्पितृनाम धृत्वा मत्पितृवंशोद्धारक एव स भवतु" इति सुदृढं ऊचे पत्युराक्षेपं असहमाना भामिनी।

"मदीयः पुत्रस्सन् अन्यवंशोद्धारकः कथं बुभूषति सभ्रूण-ब्रुचः ? अतस्तेन मद्वंशोद्धारकेणैव भाव्यम्" इति दृढतर मूचिवान् पुमान्।

एवंरीत्या शय्याधिकरणे दम्पत्योः प्रथमं संवादः, अनन्तरं वादः, अन्ते विवादः क्रमात्प्रवृत्तः परिणतः प्रवृद्धश्च।

  

न जातः पुत्रः। तस्य नामकरणं तु प्रसक्तम्। नामकरणं उचितमनुचितमिति नाऽत्र विवादः। नाम तु कर्तव्यमेव भाविनीं वृत्तिमाश्रित्य दम्पत्योरत्र संवाद एव न तु विवादः। परन्तु किं तन्नामेत्यत्रैव विप्रतिपत्तिः। मत्पितेति सा भणिति चेत् मत्पितेत्ययं ब्रूते। इयांस्तु विशेषः, यदुभावपि स्ववचनव्याघातं असहमानौ दृढप्रतिज्ञौ चेति।

अनयोर्दम्पत्योः वाक्कलहः निद्रामुद्रितान् प्रातिवेशिकानपि सुप्तोत्थितान् अकार्षीत् ।

सर्वे समागताः किं किमित्यप्राक्षुः । विदिते वृत्तान्ते, समाधानकर्मणि प्रवृत्ताश्च । अन्ते निश्चित्योचुः – "जनिष्यमाणस्य उभावप्यत्यन्तावश्यकौ । मातुः पितुश्च कृते रामेति कृष्णेति च नाम अवश्यं कर्तव्यम् । जनिष्यमाणः "रामकृष्णो" भविष्यति । शयनसौख्यात् वञ्चितौ मा भूतं मा स्म च अस्मान् तथा कुरुतम् इति सन्दिश्य गता यथागतम् ।

  

परेद्युः बहिर्गते पत्यौ पत्नी वहिष्ठाऽसीत् । प्रत्यागतः पतिः पत्नीं सशङ्कं विलोकयामास । सा रुदन्ती प्राह – "रामकृष्णो दिवंगत" इति । सोऽपि खिन्नः किञ्चिदिव । अयमेवं कथाप्रसंगः ।

रात्रौ अजातपुत्रस्य नामकरणे यावानुत्साहः, आग्रहश्चासीत् दम्पत्योः, तावती निराशा निस्पृहा च परेद्युः प्रभाते तयोर्जाता । अतः अजातपुत्रनामकरणं व्यर्थमित्यर्थ एव न, अपितु अनर्थकरमित्यपि सुवचम् ।



# सुलभपाठमाला ४७

## वृक्षाः १०

### जम्बूवृक्षः

जम्बूवृक्षः सर्वत्र भारते उपलभ्यमानस्तरुः । अयं महोन्नतः प्ररोहति । अस्य पत्राणि च किञ्चिन्न्यूनाधिकं प्लक्षस्य अथवा उदुम्बरस्य पत्राणि अनुकुर्वन्ति । अपि श्वेतानि ततोपि घनानि भवन्ति । एतेषां पत्राणामुपरि च तत्र तत्र किणाङ्क-सदृशानि चिह्नानि भवन्ति । वृक्षश्च सुदृढः धवलवर्णः परिदृश्यते । एतत्फलानि च नीलानि सुस्निग्धानि मधुरकषायाणि स्वदन्ते अतीव । जातिभेदात् ते दीर्घफलाः वृत्तफलाः लघुफलाश्च त्रिधा दृश्यन्ते । प्रायशः वर्षर्तौ ते फलन्ति । एतद्दारु कुत्रचित् गृहदारुत्वेनोपयुज्यते, परन्तु तत्कालेन क्रिमिदष्टं ससुषिरं भवति । काष्ठं त्वस्य नवं ससारमिव दृढं वर्तते ।

फलकाले वृक्षाधः फलानि बहुलतया पतन्ति यानि बालानां अतीव मोदाय भवेयुः । जम्बूफलानि श्रीकृष्णस्य अतीव अभीष्टानि । तस्मादेव कारणात् जन्माष्टम्यां बालकृष्णाराधने जम्बूफलान्यपि समर्प्यन्ते । एतत्फलरसेन रसायनं मारच्यते यद् अरुचिहरं रक्तातिसारामवातघ्नं मधुमेहनिवारकं च भवति । सबीजत्वक् फलचूर्णं मधुमेहस्य अमोघमौषधं भवति । मेहिनः केचित् एतद्बीजचूर्णकषायेणैव काफीं कल्पयित्वा पिबन्ति रोगनिरोधाय ।

अस्मद्भारतदेशः पुराणप्रमाणाधारेण जम्बूद्वीपे वर्तते । स च जम्बूद्वीपः मेरोर्दक्षिणदिग्भागे वर्तते । तत्र च कश्चन जम्बूवृक्षः सदाफलः वर्तते । तस्य फलानि अधः पतन्ति, तत्फलसारश्च नदीरूपेण प्रवहति । तत्फलरससंयोगाद् तत्स्थलं सुवर्णमयं भवति च । एतेनैव कारणात् सुवर्णस्य जाम्बूनदमिति नामापि प्रसिद्धमभवत् ।

अनेन प्रस्तावेन ज्ञायते जम्बूफलद्रवस्य सौवर्णकरणशक्तिरस्तीति । सिद्धा एव जानन्ति तद्रहस्यं न सामान्यजनाः । मन्ये जाम्बवांश्च एतत्फलसिद्ध्यैव चिरजीवी महाबलश्च सम्पन्न इति ।

---

## व्यासस्तुतिः

अष्टादशपुराणानाम्
गीतायाश्च प्रकाशकम् ।
सर्ववेदविभक्तारम्
वासिष्ठं तं नमाम्यहम् ॥

वासिष्ठस्य गिरां सारम्
शुकतात रस एव हि ।
न च ब्रह्मा च वाणी च
वेत्तीत्यत्र न संशयः ॥

— आर्. वी. यस्. भगवानुलु

# जयन्ति ते भारतभूमिजाताः

ले० वैद्य० रामस्वरूपशास्त्री, सम्पादकः, बालसंस्कृतम्, बम्बई - ६.

(१)

सुता विनीता पितरौ नमन्ति
नताश्च देवानपि वर्णयन्ति ।
गुरूँश्च वृद्धानपि पूजयन्ति
प्रगे च पाठान् परिशीलयन्ति ॥

(२)

न संस्कृतं क्वापि परित्यजन्ति
सुसंस्कृता भारतबालवीराः ।
अधीत्य शास्त्राणि पठन्ति वेदान्
हितानि लोकस्य समाचरन्ति ॥

(३)

गुणान् वदान्याननुशीलयन्तः
वृत्तिं च सौम्यामनुवर्तमानाः ।
पठन्ति ताः भद्रकरीश्च विद्याः
जयन्ति ते भारतभूमिजाताः ॥

—:o:—

# संस्कृतदिनोत्सवः

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

साधारणश्रावणपूर्णिमायां 17-8-70 दिने सायं षट्घण्टावादनसमये महासभा समाविष्टा आसीत्। श्रीमान् एन्. रामनाथार्यः, अड्वोकेटः सभाकार्यदर्शी अध्यक्षतामवहत्। श्रीमान् तिरुवेङ्कटाचार्यः प्रधानमन्त्री, श्रीगोपालार्यः पंडितप्रकाण्डश्च रङ्गमंच मध्यरोहताम्। श्रीमतः वरदराजपण्डितस्य निधिमन्त्रिणः स्वागतवचनैः समावेशः समुन्मिषितः। बालानां वृन्देन भारतमातृवन्दनमाचरितम्।

ततः अध्यक्षः स्वीयप्रारम्भभाषणे एवमवोचत् – संस्कृतमेवास्माकं राष्ट्रभाषा सर्वथा भवितुमर्हा। तत्पूजनं विनैवेदानीं प्रान्तभेदैः क्लिश्यामः। भारतशासननिर्माणावसर एव भाषाविषयप्रस्तावे हिन्द्याः संस्कृतस्य च सम्मतयः समाना एव प्राप्ताः। परन्त्वस्माकं दौर्भाग्यवशात् श्रीमान् राजेन्द्रप्रसादः स्वीयं विशेषसम्मतिं हिन्द्यै प्रदाय तामुदजीवयत्। सैवेदानीं अस्माकं प्राणान् हरति सर्वतः। दाक्षिणात्यौत्तराहयोः विभेदकारणं सा परिणता।

इदमत्र हर्षावहं यदधुनापि विलम्बेनापि संस्कृतोद्धरणं विना भारतदेशस्य क्षेमो नास्तीति मनुते सर्वकारः, तेन च संस्कृताभिवृद्धयै यथोचितं प्रयतते च। भारतीयैस्सर्वैः अवश्यं संस्कृतभाषाध्येतव्या, भारतीयसंस्कृतिश्च संरक्षणीया। अन्यथा संपादितस्य स्वस्वातन्त्र्यस्य वैयर्थ्यमेव भवेदिति।

ततः गोपालार्यपण्डितः स्वभाषणे एवमवोचत् – सकलभारतीयभाषाणां च मूलं संस्कृतमेव। न तावन्मात्रमेव विचार्यमाणे प्रपञ्चभाषाणामपि तदेव मूलं भवति। अधुनातनवैज्ञानिकविशेषाणां बीजानि संस्कृतभाषायामेव वर्तन्ते। अथर्ववेदे अनेकानि शस्त्रास्त्ररहस्यानि वर्तन्ते। परन्तु तद्रहस्यविवेचनार्थं अनुसन्धानमावश्यकम्। विदेशीयाश्च अस्मद् ग्रन्थान् संचित्य अस्मत्पण्डितांश्च तत्र नीत्वा तद्वारा तदर्थविशेषादिकं अभिज्ञाय नूतनाविष्कारान् असृजन्। विमाननिर्माणशास्त्रं च भारद्वाजसंहिता नाम्ना महीशूरपुरे उपलब्धम्। गणितशास्त्ररहस्यं च अथर्ववेदे सूत्राष्टकेषु संदब्धमिति पूरीशङ्कराचार्यैः सनिदर्शनं प्रपञ्चितपूर्वमेव। गोमयानुलेपनेन नानाविधानां क्रमीनां संहारः भवेदिति अद्यतना पाश्चात्या जानन्ति। पञ्चगव्यस्य सान्निध्ये अणुस्फोटवशात् भीतिर्न भवेदिति रष्यीया मन्यन्ते। सकलपापापनुत्तये पञ्चगव्यप्राशनं चास्माकं महाप्रभावसंपन्नमिति अनुभूयते। अतः हिन्दूसंस्कृति स्सर्वापि महाप्रभावसंपन्ना गभीरा अवश्यकी च वर्तते। तादृशसंस्कृतेः रक्षणाय च संस्कृतमवश्यं अध्येतव्यम्। न हि संस्कृतभाषामनादृत्य कापि भारतीयसंस्कृतिः वर्तते। अतः सर्वैः संस्कृतं श्रद्धयाऽध्येतव्यम् इति।

ततः श्री पी. सुब्बराघवय्यनामा विद्वान् संस्कृतस्यावश्याध्येतव्यत्वं प्रतिपाद्य केन्द्रसर्वकारस्य संस्कृतादरं प्रासंसत्। अपि च आंन्ध्रसर्वकारेण क्रियमाणं संस्कृतनिरादरं अपकारं चैवं व्यवृणोत् सः – प्रथमं देशभाषासमानत्वेन चत्वारः कालखण्डाः संस्कृतस्यासन्। ते क्रमशः त्रय-

स्समभवन्। अपि च प्रथमं देशभाषया समाना आसन्नङ्कास्संस्कृतस्य। यथा आंध्रस्य पञ्चाशत् संस्कृतस्यापि पञ्चाशदिति। इदानीं तु आंध्रस्य सप्रतिः संस्कृतस्य त्रिंशदिति अङ्कविभागः कृतः। एवंकरणे च बहवो विद्यार्थिनः संस्कृतमपठित्वैव उत्तीर्णा भवन्तीति संस्कृतपाठे उत्साहनाश-स्संपादितः आन्ध्रसर्वकारेणेति।

अथ तिरुवेङ्कटाचार्यः भाषमाणः संस्कृतदिनोत्सवस्य प्राशस्त्यं संस्कृतस्य भाविनीं पुनरुन्नतिं च प्रस्तूय भारतीयानां सर्वेषां संस्कृताध्ययन-दीक्षां स्वीक्रियमाणा मयाचत। सभ्यैश्च बालैर्युवभिर्वृद्धैश्च दीक्षाप्रमाणे स्वीकृते अधोनिर्दिष्टाः प्रस्तावा एकग्रीवं धारिताः –

1. संस्कृतपरिपोषणाय भारतसर्वकारेण क्रियमाणमादरं कृतज्ञता-पूर्वक मभिनन्दामो नितराम्।
2 भारतसर्वकारायैतत् सप्रश्रयं निवेद्यते यत् संस्कृतौन्नत्याय इतोधिकं साहाय्य मर्पणीय स्वच्छन्दसंस्कृतसेवकसंस्थानां कृते इति।
3 भारतसर्वकारायैतत् सविनयं निवेद्यते यत् – भारतीय माध्यमिक-उन्नतपाठशालासु सर्वत्र च संस्कृतमनिवार्यशाठ्यं आचरेत्, प्रति-पाठशालं संस्कृतोपाध्यायं वेतनेन स्वयं बिभृयात् इति।
4. भारतसर्वकाराये वन्निवेद्यते यत् प्रपञ्चसंस्कृतज्ञसम्मेलनं आहूय तेन संस्कृतवैशिष्ट्यं प्रपञ्चे प्रकाशयेदिति।
5. आन्ध्रसर्वकारायैतदभ्यर्थना समर्प्यते यत् ओंगोलप्रान्ते माननीय गोरंट्ल वेङ्कन्नमहाशयेन संस्कृतविश्वविद्यालयस्थापनोद्देशेन प्रदत्तेन निधिना दातुरुद्देशनिर्वहणेन संस्कृतस्य प्रोत्साहः अचिरादेव क्रियतामिति।

6. आन्ध्रसर्वकारः पुनः प्रार्थ्यते अनया सभया - उन्नतपाठशाला पाठ्यप्रणाल्यां संस्कृतैच्छिकविभागेपि तस्य देशभाषया सह समाने वांकान् निर्णेतुं येन विद्यार्थिनः संस्कृतमपि आदरेण पठेयुः इति ।

7, आन्ध्रसर्वकारः पुनः प्रार्थ्यते यत् देशभाषाबोधनार्थं प्रदत्तैः कालखण्डैस्समं संस्कृतबोधनायापि तान् निर्णेतुं येन एतद्भाषाया पठनपाठने सार्थके भवेताम् इति ।

अनन्तरं बालबालिकानां संस्कृतप्रपठनस्पर्धा निरवर्त्यत यत्र द्वादशमाणवका सममिलन् ये चतत्तद्योग्यतानुसारं पुस्तकैः परितोषिताः ।

अन्ततः निधिमन्त्रिणः श्री आ॰ वरदराजपण्डितस्य धन्यवादैः समेशास्संपूरितः ।





## ॥ विद्वान् विजयतेतमाम् ॥

धुरंधरो महाधीमान् राधाकृष्णमहोदयः ।
वर्धापनदिने दिष्ट्या वर्धते विजयेन वै ॥
प्राध्यापकः सुविख्यातो विश्वविख्याततत्त्ववित् ।
तज्जन्मदिवसस्तस्मात् "सुशिक्षकदिनम्" स्मृतः ॥
अनाक्रमणशीलः स सहास्तित्वप्रियोऽपि च ।
ऐक्यप्रियः प्रवक्ता स विश्वशान्तिं समीहते ॥
"अणुयुद्धं विनाशाय", "जन्तुयुद्धं तथैव च" ।
एवं सुमन्यमानोऽयं विद्वान् विजयतेतमाम् ॥

– या. वि. देवासकरः, वटपत्तनम्.



# राजाजीकथा ५१



## मुक्तामोदः

### "अवरः"

वयं सुखजीवनाय गृहनिर्माणं कुर्मः । इदं महानसाय, इद माराधनाय, इदं भोजनाय, इदं समावेशाय, इदं विनोदाय, इदं शयनाय इति नानागृह-विभागांश्च कुर्मः । कदाचित अस्माकमेव अदृष्टविशेषादिति मन्यतां निर्मितान्यपि गृहाणि अस्माकं अनुकूलानि न भवेयुः, प्रत्युत विपरीत-फलप्रदान्यपि स्युः । तदात्वे गृहाणां विनिमय विक्रयादिकमपि संभाव्यमेव ।

  

समुद्रे जायमाना वर्धमानाश्च कतिपयप्राणिनः स्वगेहं देहेन साकं निर्माय जीवन्ति । यथा यथा देहो वर्धते तथा तथा तदीयं गेहमपि वर्धत एव । देहो गेहं च युगपत् वर्धत इति महच्चित्रम् । आहारे अपेक्षिते सति, द्वारं विवृतं भवति; प्राप्ते तु भये तत स्वयमेव संवृत्त भवति । ईदृशेभ्यः प्राणिभ्य एव (नत्त-इति आन्ध्रयां) अस्माकं मुक्ताः लभ्यन्ते ।

  

मुक्ताः कियन्मनोहराः ! तत्राऽपि मालारूपेण ग्रथित्वा वा आभरणेषु खचिताः स्थगिता वा स्त्रीभिः धार्यमाणाश्चेत ता अतीव प्रकाशेरन् । तासां

प्रकाशो "धळधळे"त्यत्युज्ज्वलो भवति । परन्तु एता मुक्ताः कथं जायन्त इति ज्ञायते वा ? हाँ, तेषां प्राणिनां शोकेन, कष्टेन, भयेन, संकटेन च मुक्ताफलानि निष्पद्यन्ते ! ।

  

पक्षिमिथुने हतं मृतं कश्चिद्विलोकयतः, वाल्मीकेः शोकः श्लोकत्व मागतः, अतिरमणीयं रामायणं महाकाव्य मासीत् । तथैव एतेषां शुक्तिकानां "नत्तानां" कष्टानि संकटाश्च मुक्तारूपता मावहन्ति ।

  

"नत्तस्य" गेहे यत्किञ्चित् प्रविश्य क्षोभं जनयति चेत् समनन्तरमेव "नत्तः" शत्रुं निरुध्य, परित स्तं स्वगृहं निर्माय आत्मानं रक्षितुं प्रवर्तते । एवं आत्मरक्षायै निर्मिता एव गेहविशेषाः कालान्तरे अस्माकं मुक्ताफलरूपेण सिद्धयन्ति । अस्माकं गृहाणि तावत् केवलं इष्टकाभिः सिमेण्ट्-मृत्तिकया च निर्मीयन्ते । परन्तु "नत्तानां" जीवधातुभ्यः स्रवद्द्रव्यविशेष एव अत्युत्तम-सिमेण्ट्-मृत्तिका भूत्वा बहुमूल्या मुक्ता भवति । तेषां प्राणिनां शोकसन्तापतरंगा एव अतिमूल्यानि मुक्ताफलानि ।

  

द्रौपद्याः जानक्याश्च दुःखं शोकश्च महाभारतं रामायणं च चकार । रामायणं महाभारतं च बहुमूल्यं मुक्ता-फल मित्यत्र कस्य वा सन्देहः ?

बालाः ! मातुः शोके सति नेत्रयोः मुक्ताबिन्दवः निस्सरन्ति । सावधानं पश्यथ चेत् मुक्तानां सौन्दर्यं तदश्रुबिन्दुष्वपि गोचरं भवेत् ! किन्तु अश्रु-मुक्ता-

फलानि करुहै रपाक्षिप्यन्ते । "शुक्तिकानां" तु शोक-सन्ताप-बिन्दून् को बाऽपाक्षिपेत् ? ते घनीभाव माप्य माप्य अन्ते सुदृढं मुक्ता-फलानि भवन्ति ।

  

नत्तानां ईदृशानि कष्टानि मुक्ताफलानि भवन्तीति ज्ञात्वा दुराशापूरिता मानवा रसनीत्रमेव तं प्राणिनं दारुणं विवृत्य तदन्तर्भागे शनैर्मृत्तिकां अन्यद्वा किंचित्तत्सदृशं निक्षिप्य व्यापारार्थं माया-मुक्ताफलानि उत्पादयन्ति इति अति जनश्रुतिः ।

दुःखे कष्टे च, भये सन्तापे च अस्माकं मुक्ताफलानि समर्पयन्तो नत्त-प्राणिनः कियदुत्तमा भवन्तीति भावयत !!

घृष्टं घृष्टं पुनरपि पुनः चन्दनं चारुगन्धम्<br>छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुदण्डम् ।<br>दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णम्<br>न प्राणान्ते प्रकृतिविकृतिर्जायते सज्जनानाम् ॥





## ॥ विजयस्व महामुने! ॥

विनोबाजी मुनिश्रेष्ठो भावेवंशप्रदीपकः ।
जन्माहे विजयेनाद्य दिष्ट्या वै वर्धते सुधीः ॥
यश्चास्ति "शांतिसेनानी" यो हि भूदानयज्ञकृत ।
स्वकार्ये यः सदा मग्नो यतिः स प्रगतिप्रियः ॥
मथ्नाति सततं साधुर्हन्तुं दैन्यं स्वदेशिकम् ।
हास्ययुक्तः प्रवक्त्येवं "न कोऽपि स्याद् बुभुक्षितः" ।
मुग्धास्तेन कृताः सर्वयाऽऽत्मनः पदयात्रया ।
नेतारोऽपि वदन्त्येवं "विजयस्व महामुने!" ॥

— या० वि० देवासकरः, वटपत्तनम्.

# श्रीवेङ्कटेशविंशतिः

लेखकः – के० पि० तिरुमलै ताताचार्यः, एर्पेडु.

—;o:—

क्षीराब्धिनाथः श्रितपारिजातः समस्तलोकैकदिवाकरस्सः ।
विराजते पद्मभवादिमुख्यैः प्रसेवितो वेङ्कटशैलनाथः ॥ 1
श्रीवेङ्कटेशो विबुधेन्द्रवन्द्यः तेजोमयो मङ्गळरूपधारी ।
स्तुतिप्रियस्सेवितसर्वलोकः सतां गतिः शान्तगुणैकसिन्धुः ॥ 2
वेदान्तवेद्यो विमुखोऽसुरेषु सुरप्रियो रक्षितसर्वलोकः ।
रमापती रम्यवपुर्महात्मा वात्सल्यरूपी विविधावतारः ॥ 3
तवानने देव महानुभाव समस्तलोकान् मधुकैटभारे ।
निरीक्ष्य देवी महनीयशोभा प्रमोदमत्यन्त मगाद्यशोदा ॥ 4
श्रीनिवासो महाभानुः उदितोऽसौ महीतले ।
सरोजभक्ताः सन्मार्गाः प्राप्नुवन्ति विकासकम् ॥ 5
मङ्गळानां निवासोऽयं श्रीनिवासो महाविभुः ।
करोति मङ्गळं नित्यं भक्तानां पूतचेतसाम् ॥ 6
श्रीनिवास दयासिन्धो श्रोतव्यं करुणाकर ।
त्वदीयचरणद्वन्द्वे वर्तितव्या स्मृतिर्मम ॥ 7
भवदीयदया स्वामिन् सतां तोषप्रदायिनी ।
वर्धतां मयि देवेश वत्सला तापनाशिनी ॥ 8
गोविन्द शौरे मधुकैटभारे मालोल वागीश जगन्निवास ।
श्रियःपते शान्तगुणैकसिन्धो श्रीवेङ्कटेश श्रितपारिजात ॥ 9
सन्तापहन्ता सकलप्रदाता संकल्पमात्रेण विसृष्टिकर्ता ।
समाश्रयश्शान्तगुणप्रदाता समस्तलोकैकपिता गरीयान् ॥ 10

नेत्रभूतौ चन्द्रसूर्यौ वेङ्कटेशमहाविभोः ।
लोकरक्षाधुरं वोढा सर्वजन्तुशरीरकः ॥ 11
यथा भानुस्तमो हन्ति बाह्यकं लोकसंस्थितम् ।
वेङ्कटेशमहाभानुः अन्तर्ध्वान्तनिवारकः ॥ 12
यथा चन्द्रो मनुष्याणां हृदयाह्लादको निशि ।
श्रीनिवासमहाचन्द्रः सर्वदाऽऽह्लादको विभुः ॥ 13
विचित्रोऽयं महास्वामी श्रीनिवासो दयानिधिः ।
वित्तविद्याप्रदायी च विविधागमबोधितः ॥ 14
निखिलमुनिजनानां नित्यमांगल्यदाता
सकलरिपुकुलौघध्वान्तनाशे समर्थः ।
शतमखसुरसंघैस्सेवितः श्रीनिवासः
जयतु जयतु नित्यं जानकीजानिरेषः ॥ 15
यातुधानकुलनाशको विभुः शेषशैलशिखरे विभासते ।
तं निरीक्ष्य सकलाः प्रजाः प्रभुं कौतुकेन सहिताः मुहुर्मुहुः ॥ 16
नीलमेघनिभगोपबालकः शैशवात्प्रभृति शत्रुनाशकः ।
वासुदेव इति कथ्यते बुधैः शेषशैलशिखरोज्वलो महान् ॥ 17
वाहनं यस्य देवस्य गरुडो वेददेहकः ।
शय्या तु वेङ्कटेशस्य शेषाहिः सार्थनामकः ॥ 18
सरोजहस्तां कमनीयशोभां कान्तां त्वदीयां जननीं मदीयां ।
सौभाग्यदात्रीं जगतां नितान्तं तां देवदेवीं शरणं भजामि ॥ 19
जेजीयते दिवानाथः वेङ्कटेशो रमापतिः ।
अन्धकारनिवृत्तिर्हि क्रियते विभुनाऽमुना ॥ 20
इति श्रीशैलतातेन नम्रभावेन निर्मिता ।
वेङ्कटेशस्तुतिस्तस्य कारुण्यांचितवीक्षया ॥ 21

# सुभाषितानि

ले० श्री यन्. रामनाथार्यः

गणेशस्तोति मार्जार स्ववाहस्याभिरक्षणे ।
महानपि प्रसंगेन नीचं सेवितुमिच्छति ॥ ॥ ३४६ ॥

Lord Ganesha praises the cat for the sake of protecting his vehicle (mouse)· Even great-men sometimes attend upon low men (for acheiving their ends.)

परिपूर्णेपि तटाके काकः कुम्भोदकं पिबति ।
अनुकूलेपि कलत्रे नीचः परदारलम्पटो भवति ॥ । ३४७ ॥

Even though a tank overflowing with water is nearby, the crow drinks only from a mud pot. A mean person derives pleasure from other women leaving off his butiful wife, in his house.

चन्द्रः क्षयी प्रकृतिवक्रतनुःकलंकी
दोषाकरो भवति मित्रविपत्तिकाले ।
मूर्ध्ना तथापि विधृतः परमेश्वरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता ॥ ॥ ३४८ ॥

Though suffering from consumption decre-ases), having a crooked from, dull-witted (being

wet), with full of faults (Maker of night), and arises when his friend (the sun) sinks, the moon is born on his head by Lord Parameswara. Greatmen do not consider the merits or demerits of those who seek their protection.

विवाहकाले ऋतुसंप्रयोगे प्राणात्यये सर्वधनापहारे ।
मित्रस्य चार्थे ह्यनृतं वदेयुः पश्चानृतान्याहुरपातकानि ॥ ३४९ ॥

Untruth indulged in, in these five instances, namely, to bring about a desirable alliance, at the time of intercourse with women, to avert danger to life, when one is about to lose his entire wealth, and for the sake of helping a friend one considered free from blamish.

राजा वेश्या यमो वह्निः प्राघूर्णो बालयाचकौ ।
परदुःखं न जानन्ति अष्टमो ग्रामकण्टकः ॥ ॥ ३५० ॥

These eight persons do not care for others difficulties viz the King, the dancing girl, the God of death, fire, a guest, an infant and a tale bearer.

(सशेषम्)